क्षायणात् वामकक्षायणः शाण्डिल्यात् शाण्डिल्यो वात्स्यात् वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनात् यज्ञवचा राजस्तम्बायनः तुरात् कावषेयात् तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ४ ॥

अथ वंशब्राह्मणमारभ्यते—अथेति। अथेदानीं समस्तप्रवचनवंशः स्त्रीप्राधान्यात्। गुणवान् पुत्रो भवतीति प्रस्तुतम्। अतः स्त्रीविशेषणेन पुत्रविशेषणेन च। तानीमानि शुक्लानि यजूंषि। प्रजापतिमारभ्य यावत्पौतिमाषीपुत्रः तावदधोनीताचार्यपूर्वक्रमोऽयं वंशब्राह्मणः। यत्र एतस्मिन् अखिलं विकल्पितं तद्धि स्वयंभु स्वविकल्पितहेयांशापाये यत् स्वमात्रमवशिष्यते तद्धि ब्रह्म। तस्मै नमो नम इत्यर्थः ॥ १-४ ॥

**इति पञ्चमं ब्राह्मणम्**

इति षष्ठोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं बृहदारण्यकस्य हि ॥
बृहदारण्यकव्याख्याग्रन्थसंख्या निगद्यते।
त्रिशताधिकयुक्पञ्चसहस्रं परिकीर्तिता ॥
ईशादिबृहदारण्यावधि व्याख्यानविस्तरः।
सप्तविंशाधिकशतत्रयोदशसहस्रकम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे दशसंख्यापूरकं बृहदारण्यकोपनिषद्विवरणं संपूर्णम्

**श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्रार्पणमस्तु**

# नामधेयपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या।

# विशेषपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या।

